# IS THE WORLD MORALLY PROGRESSING

AN ESSAY IN SANSKRIT

BY

T. N. RAMACHANDRAN, M.A.,

*Archaeological Assistant, Govt. Museum, Madras.*

PUBLISHER

M. S. SARMA

2/19, Audiappa Mudali Street, Purasawalkam

MADRAS

# FOREWORD

BY

MAHĀMAHOPĀDHYĀYA, VIDYĀVĀCASPATI,

S. KUPPUSWAMI SASTRI, M.A., I.E.S.,

PROFESSOR OF SANSKRIT &
COMPARATIVE PHILOLOGY, PRESIDENCY COLLEGE AND
CURATOR, GOVERNMENT ORIENTAL MANUSCRIPTS
LIBRARY, MADRAS.

---

This brochure contains a good Sanskrit essay written by Mr. T. N. Ramachandran, M.A., when he was one of my students in the Sanskrit Honours department of the Presidency College. He wrote this in connection with a competition in Sanskrit composition arranged in the year 1922, under the rules governing the "*Pandit Narasimhacharya Sanskrit Prize*" of the Presidency College. Mr. T. N. Ramachandran's essay was found to be the best of the essays received for that competition and he won the said prize in 1922. I am glad that this essay is now published. It deals with the somewhat delicate and difficult subject "Is the world morally progressing?" A perusal of this essay will enable its

readers to appreciate duly Mr. T. N. Ramachandran's good grip over the intricacies of the Sanskrit language and his intelligent and sound ways of thinking. I have no doubt that Sanskrit scholars will gladly welcome this useful and thought-provoking contribution to Sanskrit prose, as effectively illustrating the manner in which Sanskrit essay-writing may be happily linked up with live issues.

MYLAPORE,<br>MADRAS,<br>21-3-'30

*S. Kuppuswami Sastri.*

# IS THE WORLD MORALLY PROGRESSING?

ननु विदितमिदं विदुषां विश्वेषाम् - साङ्कल्पिकीममरसृष्टिमुत्सृज्य, मनुजसृष्टिरेव चतुर्विधानां जरायुजाण्डजस्वेदजोद्भिज्जसृष्टीनामुत्कृष्टतमेति। (जरायुजाः मनुजपश्वादयः तेषां गर्भवेष्टनाज्जरायोर्जायमानत्वात्, अण्डजाः पक्षिसर्पादयः तेषामण्डेभ्य उत्पद्यमानत्वात्, स्वेदजाः कीटमशकयूकादयः तेषां तापाधिकेष्वेव प्रदेशेषु समुद्भूयमानत्वात्, उद्भिज्जाः तरुगुल्मादयः तेषां भूमिमुद्भिद्याङ्कुरितत्वात्)। मनुजसृष्टेरेवेत्थमुत्कृष्टतमता ज्ञायते। यतः स्रष्टा जगतां मनुजायैव दत्तमेकस्मै विज्ञानम्। इदमेव विज्ञानं विवेक इति व्यवह्रियते विद्वद्भिः। सकलोऽपि मानवः विवेकमेव द्वारीकृत्य सुखमूरीकरोति, दुःखं दूरीकरोति च। विवेकस्य शक्त्यैव मनुजस्य शास्त्रेष्वभिरुचिरुदेति। तयैव शक्त्या मनुजः कृषिकुसीदवाणिज्यादिषु शिल्पव्यवसायेष्वभिवृद्धिं घटयितुमुद्युङ्क्ते। अमुयैव शक्त्या मतिमान् मनुजः स्वस्य देशस्य च सुखाय यथानीति संधिविग्रहादिकं राजकीयञ्च (Government) व्यापारविशेषमारचयितुं प्रयतते।

मन्यामहे च वयमेवं—"अभिहितेषु शास्त्रेषु (Science) कृषिकुसीदादिशिल्पव्यवसायेषु (Industry) संधिविग्रहादिराजनीतिषु (Government) च परिनिष्ठितामभिवृद्धि मधिगता भृशमभूमेति। प्रायेण स्थाने हि तत्तावत्। तथाप्यत्र विषये किंचिदालोचनीयमास्ते। तया च शास्त्रादिषु पारदर्शितारूपया त्रिविधया पुनरभिवृद्धया सह, सदाचारादिषु सन्मार्गेष्वप्यस्माकमस्ति वा कुतूहलं, तदभिवृद्धौ वा किमुत्सुकाः स्म इति च। तत्र कौतूहलं परं किञ्चिदस्तीति वक्तुं युज्यते—यतः सर्वेऽपि वयं 'तत्र सकुतुकाः स्मः' इत्येव असकृत् ब्रूमः। तत्पुनरभिधानं केवलया वा वाचा, आहोस्विदान्तरासक्त्या वेति न जानीमहे। अभिवृद्धेस्सत्वे तु कामं संशेमहे।

एषा शास्त्रशिल्पराजनीतिषु अभिवृद्धिः सदाचारादिष्वभिवृद्धिं जनयतीति केचन ब्रुवन्ति। अयमभिप्रायोऽपि नूनं असत्य एव। सा शास्त्राद्यभिवृद्धिस्सदाचारसन्मार्गादिस्थमस्माकं यत्किञ्चित् कुतूहलमपि हन्ति। पाश्चात्या अपि शास्त्रशिल्पादिषु बहुकालाज्जातां स्वाभिवृद्धिं निशाम्य, सदाचारादिष्वपि तां कल्पयन्तः, अतिभयंकरस्य समीपकाल एव संभूतस्य जर्मनीययुद्धस्य (War with Germany) अवसाने एव स्वाभिप्रायस्तु न समीचीन इत्यजानन्। 'सदाचारनदोऽवश्यं तार्यः, तस्य परं कूलं च अवश्यं प्राप्तव्यं'—इति च निश्चितवन्तस्तारणकर्मचतुरोपायाभावेनेतिकर्तव्यतामूढा अभवन्।

'सदाचारस्य द्वावेव शत्रू - अहंभावः विस्मरणं च' इति मार्विन्नामा (Prof. F. S. Marvin) आङ्गलकविरभिप्रैति। चिरादेव सदाचारादिष्वभिवृद्धिं लब्धवन्तो वयमिति चिन्तयतामस्माकं मिथ्याभिप्राय एव अहंभावः (Conceit)। नानादेशानां परस्परसंबन्धस्य अज्ञानं, अथवा तदज्ञाने निष्प्रवृत्तिरेव विस्मृतिः। जर्मनीयाः अन्ये पाश्चात्यदेशीयाश्च स्वतारतम्यादीनि सम्यग्विचार्य, स्वसंबन्धासंबन्धौ च ज्ञातुं यदि यतेरन्, तदा एषः अतिभीषणः जर्मनीयसमरो नाविर्भवेत्! अस्याः विस्मृत्यास्सद्यः फलमेत देव—यत् संख्यातीतानां मानवानां मारणमिति। अहो बत! पूर्वोक्तदेशीयाः यदीषदपि सन्मार्गसदाचारादिषु निक्षिपेयुरेकमपि पदं, तर्हि कति जीवा न प्राणयुः, कति च देशास्सुभिक्षा न भवेयुः, कति च प्राणिनः सुखमुरुतरं नाधिगच्छेयुः।

शास्त्रशिल्पराजनीतिषु समुत्पन्नामभिवृद्धिं, तस्याः पार्श्वे एव सन्मार्गादिष्वपि अभिवृद्धिर्जाता वा नवेति च ज्ञातुमारप्स्यामहे। तत्र च प्रथमं शास्त्राध्ययनं (Study of Science) विचारयामः। एतेन शास्त्राध्ययनेन स्थावराणां जङ्गमानां च वशीकरणे जायते महती शक्तिरस्माकम् ('Man's power over the forces of Nature'—From Marvin)। मनुजस्य सुखसंपादनाय किमेषा शक्तिः कारणं, उत अन्यः पन्थाः सुखसंपादनाय विद्यते—इति पृष्टे स्थावरजङ्गमशास्त्रिणः

(Naturalists) इतरे तत्वशास्त्रिणश्च 'एतयैव शक्त्या मनुजः हितं प्राप्नोति, नान्येन पथा'—इति वदेयुः। किमेतस्याः शक्त्याः सत्व एव मनुजस्य हितं भवतीति यदि पृच्छामस्तदा तेऽपि 'अथकिं' इत्येव वदेयुः। किंतु सन्मार्गादीनामेतया शक्त्या किमपि फलं न भवति। मार्विन्नामा आङ्गलकविरेवमभिप्रैति—'शास्त्राध्ययनादिना (Here Marvin refers to the progress of science) अस्मत्सोदरमारणयोग्यानि साधनान्येव संपादयामः'—इति। तस्यैतत् वचनं यथार्थमेव। यतः, एतेन शास्त्राध्ययनेन अधिकवित्तस्य प्राप्तौ आशां कुर्महे। एतया अतिदारुणया वित्ताशयैव एतत् जर्मनीययुद्धमजनि, तस्मिंश्च असंख्याः प्राणिनश्चाक्रमेण मृत्युमवापन्।

नूनं सर्वे जानन्तीदं—शास्त्रेष्वभिवृद्धिर्न सपदि सुलभतया जातेति। भूरि वित्तं भूयांश्च पुरुषप्रयत्नः अभिवृद्धेरेतस्याः जनयितारौ। अपित्वेषा अभिवृद्धिर्न सर्वेषां साधारणजनानामलं प्रयोजनाय। सामान्यजनाः पुनरेतामभिवृद्धिमवगन्तुमशक्ताः, विमनसश्च सन्ति। इदं च तेषां प्रायः हितमेव जनयति। यतः शास्त्राध्येतार इव ते मतेषु उदासीनाः, नास्तिकाश्च न भवन्ति। डार्विन्नभिधः कश्चन आङ्गलतत्वशास्त्री (Darwin, the famous scientist, who first put forward and developed the 'theory of evolution') स्वस्य शास्त्रोत्पन्नेन आसक्तिप्राचुर्येण, स्वयं मतोदासीनः नास्तिक इति च प्रकटीकरोति स्म स्वमात्मा-

नम् । अपि च हक्स्लीनामा अन्यस्स्थावरजङ्गमशास्त्री (Huxley, a naturalist who followed Darwin in his 'theory of evolution') पुरातनविद्याभ्यासं तुच्छीकृत्य, विद्याभ्यासविषये शास्त्राध्ययनस्यैव (Science) प्राधान्यं दातव्यमित्यभ्यधात् । एतेन शास्त्राध्ययनेन संभवतो दोषान् यदि चिन्तयेम, तदा एतस्मिन् विद्याभ्यास एव न प्रवर्तेमहि ।

अपिच कृषिकुसीदादिशिल्पाभिवृद्धेः (Progress in industry) सन्मार्गाद्यभिवृद्धेश्च न कोऽपि संबन्धः दृश्यते इति पूर्वमेवाभिहितमस्माभिः । शिल्पाभिवृद्ध्या अक्लेशेन भूरि वित्तमुपार्ज्यते, तेन च सुखमाप्यतेऽस्माभिः । भूरिवित्तार्जनाय, सुखाप्तये चोपयुक्तः एष उपायः अवश्यमस्मद्धिताय भवतीति सर्वे जानन्ति। एष उपायः (Principle of economy) सेसूनाम्ना पाश्चात्यशास्त्रिणा अलसोपाय (Principle of laziness) इति व्यवह्रियते । एषा शिल्पाभिवृद्धिर्वित्ताशां जनयति। वित्ताशया परं सर्वे सर्वेशं परमपुरुषं विस्मृत्य, सदाचारसन्मार्गादिषु प्राप्य च वैमनस्यं, मृगसधर्माणो भवन्ति । अपि च सर्वे जना एतया वित्ताशया, तज्जनितैः मदमात्सर्यादिभिर्दुर्गुणैश्च पीड्यमानाः, परस्परं कलहायमानाः, 'सर्वे जनास्सोदराः' इति सदुक्तिं न स्मृतिपथमारोपयन्ति ।

पुरातनास्तु शिल्पिनस्स्वीयानि शिल्पानि स्वेष्वेव गृहेष्वभिवर्धयन्तः, वित्ताशारूपेण ब्रह्मरक्षसाप्यपीड्यमानाः,

सदाचारसन्मार्गनिरताः सुखमवात्सुः । भ्रातृभावबोधिकां सदुक्तिं च न व्यस्मार्षुः । पुरातनशिल्पाभ्यासे, भ्रातृभावस्य विस्मृतिरस्माकं न संभवेदिति चिन्तयन्नेव, रेनामा (Sir P. C. Ray) वङ्गदेशीयः (Bengalee) तत्वशास्त्रिणामग्रेसरः तन्तुवयनयन्त्रं (charka) सबहुमानं स्तवीति । अस्मत्पूर्वैरनुष्ठितानाचारान्यदि न विसृजेम, नूनं तर्हि सदाचारादिष्वभिवृद्धिमाप्नुयाम, सुखं च वसेम ।

राजनीतिभिरपि (Government) जगत् सदाचारादिषु नैवासक्तिं भजते । प्रतिदेशं तत्तद्देशीयाः यथास्वेच्छं यथास्वलाभं च राज्यतन्त्राणि प्रतिष्ठापयन्ति । तत्रैकं राज्यतन्त्रमन्यस्य देशस्य राज्यनिर्वहणरीतिं नानुसरति । ततः सर्वाणि राज्यतन्त्राणि भिन्नभिन्नान्येव दृश्यन्ते । परस्परं राज्यतन्त्रविभेदेन च दुःखमेव भूरि भवति, न तु किञ्चिदपि सुखमित्येतत् जर्मनीयसङ्गरद्रष्टार एव सम्यक् जानीयुः ।

इदानींतनस्तु राजनयः, मिलतामभिमानिनां बहुलतराभिमानिभागीयमभिलाषमनुसृत्यैव निर्मीयते । तादृशमभिलाषमनुसृत्यैव सर्वे जना गच्छेयुः । अस्य बहुलतरभागस्य (The majority) अभिप्रायस्तु प्रायेण असमीचीन एव दृश्यते— यतः आङ्गलदेशीयस्य अधिकतरजनभागस्य अभिप्रायेणैव अयर्लान्दुदेशीयाः बहोः कालादारभ्य इदानीमपि स्वदुःखनाशमनवगच्छन्तः, रणभूमौ त्यजन्त्यसून् । अहो कष्टं! अपिच

निष्करुणेनैतेन अभिप्रायेण अपरिमिताः प्राणिनस्सङ्गरे जर्मनीये कृताः खलु वैवस्वतपुरातिथयः ।

ईदृशेन समधिगतविषयपर्यालोचनेन सम्यगेतदेव विदितमस्माभिः—'सदाचारः परं आरम्भ एव वर्तते, न तु यां कांचन अभिवृद्धिं लभते स्म'—इति । तर्हि कथं पुनस्सदाचारस्तावदभिवृद्धिं लभेत ? जगति बहवो देशाः, तथा अनेकविधा जनाः, तथा च तेषां जनानां अभिप्रायभेदा आचाराश्च विविधा विद्यन्ते । एते देशाः सदाचारे अभिवृद्धिं यद्यभिलषेयुस्तर्हि तत्र परस्परमैकमत्यानुगुणं समयमधिगच्छेयुः । ते परस्परं बहुधा भिद्यमानाभिप्रायाचारादयोऽपि, परस्परमतिरस्कुर्वन्तः, अद्विषन्तः, अप्रमादिनः, जगद्धितकारिणश्च यदि भवेयुः, तदैव जगति सदाचारसन्मार्गादिधर्मसंततिरनश्वरमास्पदमवलंब्य परामुन्नतिमाप्नुयादिति निश्चप्रचम् । इत्थमनुतिष्ठत्सु सकलेषु सर्वेश्वरस्य शासनमपि परममादृतं भवेदिति सर्वजनीनम् । सांप्रतमेतादृशमादृतमनुष्ठितमेव सांप्रतम् ॥

शुभम्

*The Progressive Printers,*
*17, Coral Merchant St., Madras.*